गणेश्वर उवाच—

। वत्से कस्य कन्या मातर्मां ब्रूहि किं शुभे । पापदोऽशुभदः शश्वद्ध्यानभङ्गस्तप-
स्विनाम् ॥ १८ ॥

गः कैगेतु कल्याणं हन्तु विघ्नं कृपानिधिः । तद्ध्यानभङ्गजाद्दोषान्नाशुभं स्यात्तु ते शुभे

शवचनं श्रुत्वा तमुवाच स्मरातुरा । सस्मितं सकटाक्षं च देवं मधुरया गिरा ॥

१ तुलस्युवाच—

धर्मात्मजस्य कन्याऽहमप्रौढा च तपस्विनी । तपस्या मे स्वामिनोऽर्थे त्वं स्वामी भव मे प्रभो

तुलसीवचनं श्रुत्वा गणेशः श्रीहरिं स्मरन् । तामुवाच महाप्राज्ञः प्राज्ञीं मधुरया गिरा ॥

गणेश उवाच—

हे मातर्नास्ति मे वाञ्छा घोरे दारपरिग्रहे । दारग्रहो हि दुःखाय न सुखाय कदाचन ॥

हरिभक्तेर्व्यवायश्च तपस्यानाशकारकः । मोक्षद्वारकपाटश्च भवबन्धनपाशकः ॥२४॥

गर्भवासकरः शश्वत्तत्त्वज्ञाननिकृन्तकः । संशयानां समारम्भो यस्त्याज्यो वृषलेऽपि ॥

गेहोऽहंकरणानां च सर्वमायाकरण्डकम् । साहसानां समूहश्च दोषाणां च विशेषतः ॥

निवर्तस्व महाभागे पश्यान्यं कामुकं पतिम् । कामुकेनैव कामुक्याः संगमो गुणाद्भवेत्

इत्येवं वचनं श्रुत्वा कोपात्सा तं शशाप ह । दारास्ते भविताऽसाध्वी गणेश्वर न संशयः

इत्याकर्ण्य सुरश्रेष्ठस्तां शशाप शिवात्मजः । देवि त्वमसुरग्रस्ता भविष्यसि न संशयः ॥

तत्पश्चान्महतां शापाद्वृक्षस्त्वं भवितेति च । महातपस्वीत्युक्त्वा तां विरराम च नारद ॥

शापं श्रुत्वा तु तुलसी सा रुरोद पुनः पुनः । तुष्टाव च सुरश्रेष्ठं स प्रसन्न उवाच ताम्

गणेश्वर उवाच—

पुष्पाणां सारभूता त्वं भविष्यसि मनोरमे । कलांशेन महाभागे स्वयं नारायणप्रिया ॥

प्रिया त्वं सर्वदेवानां श्रीकृष्णस्य विशेषतः । पूजा विमुक्तिदा नृणां मया भोग्या न नित्यशः

इत्युक्त्वा तां सुरश्रेष्ठो जगाम तपसे पुनः । हरेराराधनव्यग्रो बदरीसंनिधिं ययौ ॥

गाम तुलसीदेवी हृदयेन विदूयता । निराहारा तपश्चक्रे पुष्करे लक्षवर्षकम् ॥३१॥

पश्चान्मुनीन्द्रशापेन गणेशस्य च नारद । सा प्रिया शङ्खचूडस्य बभूव सुचिरं मुने ॥

ततः शंकरशूलेन स ममारासुरेश्वरः । सा कलांशेन वृक्षत्वं ययौ नारायणप्रिया ॥

कथितश्चेतिहासस्ते श्रुतो धर्ममुखात्पुरा । मोक्षदश्च सारश्च पुराणेन प्रकीर्तितः ॥३८॥

ततः परशुरामोऽसौ जगाम तपसे वनम् । प्रणम्य शंकरं दुर्गां संपूज्य च गणेश्वरम् ॥३९॥

१ क. मद्धया°।

पूजितो वन्दितः सर्वैः सुरेन्द्रमुनिपुंगवैः । पार्वतीशिवसांनिध्ये सुखं तस्थौ गणेश्वरः ॥
इदं गणपतेः खण्डं यः शृणोति समाहितः । स राजसूययज्ञस्य फलमाप्नोति निश्चितम् ॥
अपुत्रो लभते पुत्रं श्रीगणेशप्रसादतः । धीरं वीरं च धनिनं गुणिनं चिरजीविनम् ॥
यशस्विनं पुत्रिणं च विद्वांसं सुकवीश्वरम् । जितेन्द्रियाणां प्रवरं दातारं सर्वसंपदाम् ॥
सुशीलं च सदाचारं प्रशंस्यं वैष्णवं लभेत् । अहिंसकं दयालुं च तत्त्वज्ञानविशारदम् ॥
भक्त्या गणेशं संपूज्य वस्त्रालंकारचन्दनैः । श्रुत्वा गणपतेः खण्डं महावन्ध्या प्रसूयते ॥
मृतवत्सा काकवन्ध्या ब्रह्मन्पुत्रं लभेद्ध्रुवम् । अदुष्टदूषणपरा शुद्धा चैव लभेत्सुतम् ॥
संपूर्णं ब्रह्मवैवर्तं श्रुत्वा यल्लभते फलम् । तत्फलं लभते मर्त्यः श्रुत्वेदं खण्डमुत्तमम् ॥
वाञ्छां कृत्वा तु मनसि शृणोति परमास्थितः । तस्मै ददाति सर्वेष्टं सुरश्रेष्ठो गणेश्वरः
श्रुत्वा गणपतेः खण्डं विघ्ननाशाय यत्नतः । स्वर्णयज्ञोपवीतं च श्वेतच्छत्रं च माल्यकम्
प्रदीयते वाचकाय स्वस्तिकं तिललड्डुकान् । परिपक्वफलान्येव देशकालोद्भवानि च ॥

इति श्रीब्रह्मवैवर्ते महापुराणे गणपतिखण्डे नारदनारायणसंवादे परशुरामगणे-
तत्खण्डश्रवणफलवर्णनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

## समाप्तमिदं श्रीब्रह्मवैवर्तपुराणस्य तृतीयं महागणपतिखण्डम् ॥

---